इति। अकामतस्तप्तकृच्छ्रं कामतश्चान्द्रायणम्॥

इति। इदमेव प्रायश्चित्तं रजकाद्यन्नभक्षणेऽपि ज्ञेयम्।

तदाह बौधायनः।

बहूनामेकधर्माणामेकस्यापि यदुच्यते।

सर्वेषामेव तत्कुर्यादेकरूपा हि ते स्मृताः।

अत एवापस्तम्बः।

रजकव्याधशैलूषवेणुचर्मोपजीविनः।

एतेषां यस्तु भुञ्जीत द्विजश्चान्द्रायणं चरेत्।

इदं च कामतः। अकामतस्तु तप्तकृच्छ्रमेवात्रापि ज्ञेयम्।

चण्डालादिस्पृष्टस्य स्नानं विना भोजने पैठीनसिः।

चण्डालपतितामेध्यैःकुनखैः कुष्ठिनां तथा।

संस्पृष्टस्तु यदा भुङ्क्ते तप्तकृच्छ्रं समाचरेद्॥

इति। अत्रामेध्या म्लेच्छादयः सर्वे निन्दिता गृह्यन्ते। अस्य स्पर्शे-त्वहोरात्रोपोषितस्य पञ्चगव्याशनम्।

स्नानार्हस्तु यदा स्नानमकृत्वाऽश्नाति वै द्विजः।

अहोरात्रोषितः स्नातः पञ्चगव्येन शुध्यति॥

इति स्मरणात्। चण्डालाद्युच्छिष्टभोजने त्वापस्तम्बः।

अन्त्यानां भुक्तशेषन्तु भक्षयित्वा द्विजातयः।

चान्द्रं कृच्छ्रं तदर्द्धं च ब्रह्मक्षत्रविशां विधिः।

अंगिराः।

चण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे।

चान्द्रायणं चरेद्विप्रः क्षत्रः सांतपनं चरेत्।

षड्रात्रं च त्रिरात्रं च वर्णयोरनुपूर्वशः॥

इति। सांतपनं सप्ताहसाध्यं ज्ञेयम्। इदन्तु स्वतः प्रवृत्तस्य। बलात्कारेण भोजनस्य तु विशेषमाहापस्तम्बः।

बलाद्दासीकृता ये तु म्लेच्छचण्डालदस्युभिः।

अशुभं कारिताः कर्म गवादिप्राणिहिंसनम्।

उच्छिष्टमार्जनं यत्र तथा तस्यैव भोजनम् ।
खरोष्ट्रविड्वराहाणामामिषस्य च भक्षणम् ।
तत्स्त्रीणां च तथा सगस्ताभिश्च सह भोजनम् ।
मासोषिते द्विजातौ तु प्राजापत्यं विशोधनम् ।
चान्द्रायणं त्वाहिताग्नेः पराकस्त्वथवा भवेत् ।
चान्द्रायणं पराकं च चरेत्संवत्सरोषितः ।
संवत्सरोषितः शूद्रो मासार्द्धं यावकं पिबेत् ।
मासमात्रोषितः शूद्रः कृच्छ्रपादेन शुध्यति ।
ऊर्ध्वं संवत्सरात्कल्प्य प्रायश्चित्तं द्विजोत्तमैः ।
संवत्सरैस्त्रिभिश्चैव तद्भावं स नियच्छति ।
ह्रासो न विद्यते तस्य प्रायश्चित्तैर्दुरात्मन इति ।

अत्र बलाद्दासीकरणमेव प्रायश्चित्तनिमित्तं यच्छुद्धयोगाद्दासीकरणनिर्वाहकं चाशुभकर्मकारणं तत्प्रपञ्चः श्वगर्वादिप्राणिहिंसादिस्तेन तदभ्यासेऽपि प्रायश्चित्तनिमित्तस्यैकत्वान्न प्रायश्चित्ताधिक्यम् यथा ब्रह्मवधनिर्वाहकाणां प्रहारादिव्यापाराणां बहुत्वेऽपि निमित्तैकत्वादेकमेवनैमित्तिकमिति । अत्र सर्वत्र प्रायश्चित्तानन्तरं पुनरुपनयनं कार्यम् । तच्चाग्रिमाध्याये स्वयमेव वक्ष्यति ।

एवं विप्रस्यामेध्यादिभोजनप्रायश्चित्तमुक्त्वा क्षत्रियादीनां तदाह ॥

**तथैव क्षत्रियो वैश्योऽप्यर्द्धं चान्द्रायणं चरेत् ॥**
**शूद्रोऽप्येवं यदा भुङ्क्ते प्राजापत्यं समाचरेत् ॥ २ ॥**

ब्राह्मणस्य चान्द्रायणविधानाद्वैश्यस्य च तदर्द्धविधानान्मध्यवर्त्तिनः क्षत्रियस्य पादोनं चान्द्रायणमिति गम्यते । तदेव च तथैवेत्यतिदेशेनावगमितम् । उपदिष्टादतिदिष्टस्याल्पत्वात् । शूद्रोऽप्येवममेध्यादि यदा भुङ्क्ते तदा प्राजापत्यं कुर्यात् । इदं च कामतः । अकामतस्तु आपस्तम्बः ।

चण्डालान्नं यदा भुक्तं ब्राह्मणाद्यैः प्रमादतः ।
प्रायश्चित्तं कथं तत्र वर्णे वर्णे विधीयते ॥
चान्द्रायणं चरेद्विप्रः क्षत्रः सांतपनं चरेत् ।
षड्रात्रं च त्रिरात्रं च वर्णयोरनुपूर्वशः ॥

इति । एतेन

भुक्त्वाऽतोऽन्यतमस्यान्नममत्या तु त्र्यहं क्षिपेत् ।
मत्या भुक्त्वा चरेत्कृच्छ्रं रेतो विण्मूत्रमेव च ॥

इतिसामान्यमनुवचनं शूद्रविषये स्पष्ट व्यवस्थापितम् ॥

एवं चतुर्णामपि वर्णानां व्रतं निरूप्य तदेव कर्त्तव्यमाह ।

**पञ्चगव्यं पिबेच्छूद्रो ब्रह्मकूर्चं पिबेद्द्विजः ॥**
**एकद्वित्रिचतुर्गा वा दद्याद्विप्राद्यनुक्रमात् ॥ ३ ॥**

पञ्चानां गव्यानां समाहारः पञ्चगव्यं वक्ष्यमाणलक्षणममन्त्रकमेव शूद्रः पिबेत् । तदेव वक्ष्यमाणविधिविशिष्टं ब्रह्मकूर्चं द्विजो विप्रादि-पिबेत् । अनन्तरं विप्राद्यनुक्रमेणैकद्वित्रिचतुर्गा दद्यात् । विप्र एकां क्षत्रियो द्वे वैश्यस्तिस्रः शूद्रश्चतस्र इति अनडुत्साहित्यापेक्षया वा शब्दः । तथा च बृहत्पराशरः ।

अगम्यागमने चैव मद्यगोमांसभक्षणे ।
शुद्धै चान्द्रायणं कुर्यान्नदीं गत्वा समुद्रगाम् ।
चान्द्रायणे ततश्चीर्णे कुर्याद्ब्राह्मणभोजनम् ।
अनडुत्सहितां गां च दद्याद्विप्रेषु दक्षिणाम् ॥

इति । कामकृतनिमित्तविहितचान्द्रायणसमभिव्याहारात्तत्रैवा-नडुत्सहितं गोदानम् । अकामकृते तु गोमात्रदानमिति व्यवस्था

विप्रस्य शूद्राद्यन्नभोजने प्रायश्चित्तमाह ॥

**शूद्रान्नं सूतकान्नं च अभोज्यस्यान्नमेव च ॥**
**शङ्कितं प्रतिषिद्धान्नं पूर्वोच्छिष्टं तथैव च ॥ ४ ॥**
**यदि भुक्तं तु विप्रेण अज्ञानादापदापि वा ॥**
**ज्ञात्वा समाचरेत्कृच्छ्रं ब्रह्मकूर्चं तु पावनम् ॥ ५ ॥**

शूद्रस्वामिकमन्नं शूद्रान्नं सूतककालीनमन्नं सूतकान्नं न जननमरणा-शौचान्नं तत्र व्रतविशेषस्य वक्ष्यमाणत्वेन पौनरुक्त्यापातात् । अभोज्यस्य कदर्यादेरन्नं शङ्कितम्, भोज्याभोज्यतया संदिग्धम्, प्रतिषिद्धमनर्चितादि

पूर्वोच्छिष्ट भुक्तार्द्धावशिष्टमन्नं विप्रेण यद्यज्ञानादापदा वान्तरालाभेन-वा सकृद्भुक्तं तदा ब्रह्मकूर्चं वक्ष्यमाणलक्षणं पावनं शोधकं चरेदभ्यासे तत्समसख्यतया तदेवाभ्यसेन्मत्या सकृद्भोजने तु त्रिरात्रमुपवसेज्ज्ञात्वा-भ्यासे तु कृच्छ्रं चरेत्तदेतत्स्पष्टमाह प्रजापतिः ।

ब्राह्मणस्यैव शूद्रान्नमभोज्यं परिकीर्तितम् ।
सकृद्भुक्त्वा तथाऽज्ञानाद्ब्रह्मकूर्चं सकृत्पिबेत् ॥
अभ्यासे च तदभ्यस्येदाममन्नमगर्हितम् ।
मत्या त्रिरात्र कुर्वीत कृच्छ्रमभ्यासतश्चरेद् ॥

इति । सूतकान्नलक्षणमाह वृद्धवसिष्ठः ।

सर्वेषामेव वर्णाना सूतक राहुदर्शने ।
सचैलं च भवेत्स्नान सूतकान्न च वर्जयेत् ।
तदपि पक्वमेव । शृतमन्नं विवर्जयेद् ॥

इतिषड्त्रिशन्मतात् । तत्र प्रायश्चित्तमाह हारीतः ।

आशौचान्न सूतकान्न सरोषं वापि संस्कृतम् ।
शङ्कितं प्रतिषिद्धान्नं विद्विषोऽन्नमथापि च ॥
यदि भुञ्जीत विप्रस्तु प्रायश्चित्तं ध्रुवं भवेत् ।
प्राशयेत्पञ्चभिर्मन्त्रैः पञ्चगव्यं पृथक् पृथक् ।
एतेन शुध्यते विप्रो ह्यन्यैश्चाभोज्यभोजनैः ॥

इति । समन्त्रकपञ्चगव्यविधानं ब्रह्मकूर्चमेव शब्दान्तरेणाह । इद-मकामतः सकृद्भोजने अन्यत्र प्रजापत्युक्तएव विशेषो बोध्यः । पूर्वोच्छिष्ट-भोजने तु ब्रह्मकूर्चसमानत्वमेव मुक्तं स्मृत्यन्तरे ।

स्वमुच्छिष्टं तु यो भुङ्क्ते यो भुङ्क्ते भुक्तभाजने ।
एवं वैवस्वतः प्राह भुक्त्वा सांतपनं चरेद् ॥
इति । अभोज्यान्नान्याह याज्ञवल्क्यः ।
कदर्यबद्धचौराणां क्लीबरङ्गावतारिणाम् ।
वैणाभिशस्तवार्द्धुष्यगणिकागणदीक्षिणाम् ।
चिकित्सकातुरक्रुद्धपुंश्चलीमत्तविद्विषाम् ।

क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम् ।
अवीरास्त्रीस्वर्णकारस्त्रीजितग्रामयाजिनाम् ।
शस्त्रविक्रयिकर्मारतन्तुवायश्ववृत्तिनाम् ।
नृशंसराजरजककृतघ्नवधजीविनाम् ।
चैलधावसुराजीवसहोपपतिवेश्मनाम् ।
पिशुनानृतिनोश्चैव तथा चाक्रिकवन्दिनाम् ।
एषामन्नं न भोक्तव्यं सोमविक्रयिणस्तथा ।

इति । एवमन्येऽपि स्मृत्यन्तरादनुसन्धेयाः । एते च सर्वे ब्राह्मणा एव तत्तद्वृत्त्युपजीवनाभोज्यान्ना नत्वन्ये । अत एव बृहस्पतिः । भोज्यान्नान् परिगणय्यान्ते ।

कर्मस्वेतेषु यो मोहाद्ब्राह्मणो वर्तते सदा ।
प्रायश्चित्तेऽपि चरिते परिहार्यो भवेत्स हि ।
एते ब्राह्मणचण्डालाः सर्वे ब्रह्महताः किल ।
तथा दैवे च पित्र्ये च वर्जितास्तत्त्वदर्शिभिः ॥

इत्युपसंहृतवान् । एषामनुतापे प्रायश्चित्तमप्याह स एव ।

एतेषामेव सर्वेषां प्रत्यापत्तिं तु मार्गताम् ।
भैक्षान्नमुपयुंजानो द्विजश्चान्द्रायणं चरेद् ॥

इति । एषामन्नभोक्तुरपि प्रायश्चित्तमाह स एव ।

एतेषां ब्राह्मणो भुक्त्वा दत्वा कृत्वा प्रतिग्रहम् ।
प्राजापत्येन शुध्येत्तु तस्मात्पापान्न संशयः ॥

इति । प्रतिषिद्धान्नमप्याह याज्ञवल्क्यः

अनर्चितं वृथामांस केशकीटसमन्वितम् ।
शुक्तं पर्युषितोच्छिष्टं श्वस्पृष्टं पतितेक्षितम् ।
उदक्यास्पृष्टसंघुष्टं पर्यायान्नं च वर्जयेत् ।
गोघ्रातं शकुनोच्छिष्टं पदा स्पृष्टं च कामतः ॥

इति । एवमन्यदपि उदाहार्यम् । अत्रान्नमिति सामान्योपादानेऽपि पक्वमेव ज्ञेयम् ।

---

१ पर्याचान्तमित्यपिपाठः ।

अभोज्यानां तु सर्वेषां भुक्त्वान्नमुपसंस्कृतम् ॥

इत्यङ्गिरःस्मरणात् । न त्वाममन्नमगर्हितमिति वचनात्

यत्तु

आमं वा यदि वा पक्वं शूद्रान्नमुपसाधयेत् ।
किल्बिषं भजते भोक्ता यश्च विप्रः पुरोहितः

इत्यङ्गिरसैवोभयविधमपि निन्दितम् । तदाहिताग्निविषयम् ।

आहिताग्निस्तु यो विप्रः शूद्रान्नं प्रतिगृह्य तु ।
भुङ्क्ते तामसतां याति तिर्यग्योनिं च गच्छति ॥

इति तस्यैवोपक्रमात् । चकारेण समुच्चिते बिडालाद्युच्छिष्टे तथैवेत्यनेनोक्तं प्रायश्चित्तमतिदिश्यते । तदाह संवर्त्तः ।

बिडालमूषकोच्छिष्टे पञ्चगव्यं पिबेद्द्विजः ।
श्वकाकोच्छिष्टगोच्छिष्टभक्षणे तु त्र्यहं पिबेत् । इति ॥

एवमुच्छिष्टस्याभोज्यत्वे क्वचिद्विशेषमाह ।

**बालैर्नकुलमार्जारैरन्नमुच्छेषितं यदा ॥**
**तिलदर्भोदकैः प्रोक्ष्य शुध्यते नात्र संशयः ॥ ६ ॥**

बाला अत्र पूर्णपञ्चवर्षाः
ऊनैकादशवर्षस्य पञ्चवर्षात्परस्य च ।
इतिस्मरणात् । तन्न्यूनस्य नोच्छिष्टापादकत्वम् ॥
अतो न्यूनतरस्यास्य नापराधो न पातकम् ॥ इति
बालैरनुपरिक्रान्तं नित्यं मेध्यमितिस्थितिः ॥

इतिस्मरणात् । नकुलमार्जारौ प्रसिद्धौ बहुवचनान्मूषकग्रहणम् । तैरुच्छेषितमुच्छिष्टीकृतमन्नं तिलदर्भयुतैरुदकैः प्रोक्षितं शुध्यतीत्यत्र संशयो नास्ति । अप्रोक्षितभोजने तु पूर्वोक्तमेव प्रायश्चित्तम् ।

अन्योच्छिष्टाशने उशनाः । ब्राह्मणोच्छिष्टाशने तु प्राणायामशतं कुर्यात् । क्षत्रियोच्छिष्टाशने प्राणायामसहस्रम् । वैश्योच्छिष्टाशने सहस्रं प्राणायामाः । मतिपूर्वे प्राजापत्यमतिकृच्छ्रं कृच्छ्रातिकृच्छ्रं च शूद्रोच्छि-

द्राशने सप्तरात्रं यवागूपानं मतिपूर्वं चेत्पराक एवं द्विजात्युच्छिष्टभोजने शूद्राणां चेति । सहभोजने त्वाह यमः ।

भुक्त्वा सह ब्राह्मणेन प्राजापत्येन शुध्यति
भूभुजा सह भुक्त्वा च सप्तरात्रेण शुध्यति
शूद्रेण सह भुक्त्वा च चान्द्रायणमथाचरेद् ।
इति । मात्रादिभिः सह भोजने तु वृहद्यमः ।
माता वा भगिनी वापि भार्या बालाश्च योषितः ।
न ताभिः सह भोक्तव्यं भुक्त्वा चान्द्रायणं चरेद् ।

इति ॥

उच्छिष्टभोजने ।

**यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं न भोजयेत् ॥ ७ ॥**

एकस्यां पङ्क्तावुपविष्टानां विप्राणां सहैककालमेव भोजने प्रवर्त्तमाने केनापि निमित्तेन यद्येकोऽपि भोजनपात्रं त्यक्त्वोत्तिष्ठेत्तदा शेषमन्नं स्वस्वपात्रस्थितमन्यैरपि विप्रैर्न भोज्यं पङ्क्तेरुच्छिष्टत्वादिति ॥

तत्र प्रायश्चित्तमाह ॥

**मोहाद् भुञ्जीत यस्तत्र पङ्क्तावुच्छिष्टभोजनम् ॥**
**प्रायश्चित्तं चरेद्विप्रः कृच्छ्रं सांतपनं तदा ॥ ८ ॥**

यो विप्रो मोहात्पूर्वोक्तनिषेधाज्ञानात् तस्यामेव पङ्क्तावुच्छिष्टभोजनस्तद्भोजनपात्रे उपविष्ट एव भुञ्जीत स द्व्यहसाध्यं विप्रः कृच्छ्रं सांतपनं चरेत् ।

तथा च स्मृत्यन्तरे ।

यस्तु भुङ्क्ते द्विजः पङ्क्तावुच्छिष्टायां कदा च न ।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ इति ॥

पेयूषादिभोजने प्रायश्चित्तमाह ॥

**पेयूषं श्वेतलशुनं वृन्ताकफलगृञ्जनम् ॥**
**पलाण्डुवृक्षनिर्यासान् देवस्वकवकानि च ॥ ९ ॥**

उष्ट्रीक्षीरमविक्षीरमज्ञानात् भुञ्जते द्विजाः ॥
त्रिरात्रमुपवासेन पञ्चगव्येन शुध्यति ॥ १० ॥

पेयूषोऽभिनवं पयः इदं सन्धिन्यनिर्दशावत्सास्यन्दिनीयमसूपय सामुपलक्षणम् ।

सन्धिन्यनिर्दशावत्सागोपयः परिवर्जयेत् ।

इतियोगिस्मरणात् । स्यन्दिनीयमसूसन्धिनीना वेति गौतमस्मरणाच्च । तच्च सन्धिनीविशेषानुपादानाद्गोज्यपयसा अजामहिषीणा ज्ञेयम् । अत एव वसिष्ठः । गोमहिष्यजानामनिर्दशानामिति यमे निषेधादेव तद्विकाराणा दध्यादीनामपि निषेध एव । श्वेतलशुनं रसोनः श्वेतः सूक्ष्मः कलिङ्गामयकन्दनालः । श्वेतमिति विशेषणं रक्तव्यावृत्त्यर्थं तेन- तत्रेदं प्रायश्चित्तम् वृन्ताकं श्वेतं कृष्णं च ॥

वृन्ताकं श्वेतवृन्ताकं मूलकं कमूलकम् ।
अलाबु वर्तुलालाबुं शिग्रुकं रक्तशिग्रुकमिति ॥

" देवलस्मरणात् । एतेनैकपद्ममाश्रित्य श्वेतशब्दस्य लशुनवृन्ताका- भ्यामन्वयो निरस्तः ।

नालिकाशणच्छत्राककुसुम्भालाबुविड्वरान् ।
कुम्भीकन्दकवृन्ताककोविदाराश्च वर्जयेत् ॥

इतिसामान्यश्रवणाच्च । यद्यपि पलाण्डुं श्वेतवृन्ताकं कुसुम्भं वनकंटकमित्यादिविशेषस्मरणं तत्तस्यापि निषेधाय ननु तस्यैवेति । पृथग्निषेधबलादेव चोपसंहार न्यायोऽपि निरस्तः । गृञ्जन लशुनानुकारी लोहितसूक्ष्मकन्दः । पत्रविशेषो वा कण्ठशुध्यर्थं गायकोपभुज्यमानरसाः । मूलविशेषो वा गाजरापरपर्यायः । पलाण्डुः स्थूलकन्दनालो लशुनानुकारी वृक्षनिर्यासा लोहिताः वृक्षच्छेदसम्भवास्तु लोहिता अपि अत एव मनुः ।

लोहितान्वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथा ॥

इति । लोहितग्रहणाद्धिङ्गुकर्पूरादीनामनिषेधःदेवस्वं देवेभ्यो दत्तं गन्धपुष्पनैवेद्यादिव्यतिरेकेण ।

शङ्खोदकं हरेर्भुक्तं निर्माल्यं पादयोर्जलम् ।
चन्दन धूपशेषश्च ब्रह्महत्यापहारकम् ॥

इति तेषां ग्राह्यतास्मरणात् । कवकानि छत्राकाराणि शिलीन्ध्रापरपर्यायाणि उष्ट्र्याः क्षीरमव्याः मेष्याः क्षीरं अवीग्रहणं द्विस्तनीमात्रोपलक्षणं तेन स्त्रैणादेरपि ग्रहणम् ।

औष्ट्रमैकशफं स्त्रैणमारण्यकमथाविकम् ॥

इतियोगिस्मरणात् । एतानि पेयूषादीनि यद्यज्ञानाद्द्विजा भुञ्जते तदा त्रिरात्रमुपोष्य चतुर्थेऽहनि पञ्चगव्य पीत्वा शुध्यन्तीति । छान्दसो वचनव्यत्ययः । तदाह यमः ।

लशुन च पलाण्डुं च गृञ्जनं कवकानि च ।
चतुर्णां भक्षण कृत्वा तप्तकृच्छ्रेण शुध्यति ॥

इति । चतुरहसाध्यतप्तकृच्छ्रप्रतिपादकत्वादस्य मूलसमानार्थत्वमेव । विष्णुरपि । व्रश्चनामेध्यप्रभवाश्च लोहितान्वृक्षनिर्यासान्, सेलुं च वृथाकृसरसंयावपायसापूपशष्कुलींश्च देवाना हार्वींषि च, गोऽजामहिषीवर्जं सर्वपयांसि च, अनिर्दशाहेतान्यपि च, स्यन्दनीसन्धिनीयमसूविवत्सायाः क्षीरं च, अमेध्यसूपश्च, दधिवर्जं केवलं सर्वभुक्तानि, ब्रह्मचारी श्राद्धाशने त्रिरात्रमुपवसेत् । इति । कवकानिचेति चकारादलाबुकिंशुकोदुम्बराणां ग्रहणम् । तदाह कूर्मः ।

अलाबुं किंशुक चैव भुक्त्वाप्येतद्व्रत चरेत् ।
औदुम्बरन्त्वकामेन तप्तकृच्छ्रेण शुध्यति ॥

इति । एवमन्येषामपि स्वभावदुष्टाना भक्षणे तप्तकृच्छ्रमाह प्रचेताः ।

संसर्गदुष्टं यच्चान्न क्रियादुष्टमकामतः ।
भुक्त्वा स्वभावदुष्टं च तप्तकृच्छ्रं समाचरेत् ॥

इति । इदं चाकामतः सकृद्भक्षणे । कामतो भक्षणे तु कामत, इत्यनुवृत्तौ याज्ञवल्क्यः ।

पलाण्डुं विड्वराहं च छत्राकं ग्रामकुक्कुटम् ।
लशुन गृञ्जन चैव जग्ध्वा चान्द्रायणं चरेत् ॥

इति । कामतोऽत्यन्ताभ्यासे पातित्यमेव । तथा च मनुः ।

छत्राकं विड्वराह च लशुन ग्रामकुक्कुटम् ।
पलाण्डुं गृञ्जनं चैव मत्या जग्ध्वा पतेद्द्विजः ॥

इति । अकामतोऽभ्यासे सान्तपन यतिचान्द्रायण वा ।

अमत्यैतानि षट् जग्ध्वा कृच्छ्रं सातपन चरेत् ।
यतिचान्द्रायणं चापि शेषेषूपवसेदहः ॥

इति । कामतो वृन्ताकादिभक्षणे प्राजापत्यम् । तदाह यम ।

खट्वावार्ताककुम्भीकव्रश्चनप्रभवाणि च ।
भूतृणं शिग्रुकं चैव सुखण्डं कवकानि च ।
एतेषां भक्षणं कृत्वा प्राजापत्यं चरेद् द्विजः ॥

इति । कामतो निषिद्धक्षीरभोजने शङ्खः ।

अनिर्दशाया गोक्षीरं माहिषं चाजमेव च ।
पीयूषं च विवत्सायाः स्यन्दिन्या यमसोस्तथा ॥
सन्धिन्यमेध्यक्षीरं च भुक्त्वा पक्षव्रती भवेत् ।
क्षीराणि यान्यपेयानि तद्विकाराशने बुधः ॥
सप्तरात्रव्रतं कुर्याद्यावकं कामतो द्विजः ॥

इति । द्विजग्रहणादाब्रदपेयन्तस्यापि संग्रहः । तथा च स्मृत्यन्तरम् ।

क्षत्रियश्चापि वृत्तस्थो वैश्यः शूद्रोऽथ वा पुनः ।
यः पिबेत्कपिलाक्षीरं न ततोऽन्योऽस्त्यपुण्यकृत् ॥

इति । अत्र सर्वत्रापि व्रतान्ते पुनरुपनयन कार्यम् । तथा च शातातपः ।

लशुनं गृञ्जनं जग्ध्वा पलाण्डुं च तथा शुनी ।

उष्ट्री च महिषी अनिर्दशाहा पैठीनसिरपि अव्युष्ट्रीमहिषीक्षीरपाने तप्तकृच्छ्: पुनरुपनयनमिति ॥

गोमांसातिरिक्तमांसभक्षणे प्रायश्चित्तमाह ।

**मण्डूकं भक्षयित्वा तु मूषिकामांसमेव च ॥**
**ज्ञात्वा विप्रस्त्वहोरात्रं यावकान्नेन शुध्यति ॥ ११॥**

मण्डूको भेकः मूषिका आखुस्तन्मांसं चकारादुक्तपक्षिमांसं च भक्षयित्वा अनन्तरं ज्ञात्वा विप्रो यावकान्नेनाहोरात्र परिकल्प्य शुध्यति भक्षणानन्तरं ज्ञात्वेतिवदता भक्षणमज्ञानादेवोक्तं भवति । अन्यथा ज्ञान पूर्वकभक्षणे त्वेकरात्रप्रायश्चित्तविरोधोऽज्ञानकृतभक्षणे प्रायश्चित्ताभावश्चापद्येत । तथा च विष्णुः । तित्तिरिकपिञ्जललावकवर्त्तमहारवर्जं सर्वपक्षिमासाशने त्वहोरात्रमिति । कामतो भक्षणे त्रिरात्रम् ।

तदाह याज्ञवल्क्यः ।

अनुपाकृतमांसानि विट्जानि कवकानि च ।
क्रव्यादपक्षिदात्यूहशुकप्रतुदटिट्टिभान् ॥
सारसैकशफान् हंसान्सर्वांश्च ग्रामवासिनः ।
कोयष्टिप्लवचक्राव्हबलाकाबकविष्किरान् ॥
वृथाकृसरसंयावपायसाऽपूपशष्कुलीः ।
कलविङ्कं सकाकोलं कुररं रज्जुदालकम् ॥
जालपादान् खञ्जरीटानज्ञाताश्च मृगद्विजान् ।
चाषांश्च रक्तपादांश्च सौनं वल्लूरमेव च ॥
मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत् ।

इति । एतेन बकबलाकाहंसप्लवचक्रवाककारण्डवगृहचरकपोतपारावतचाषचटककाकपादोलूकशुकसारटिट्टिभमद्गुरचाषभासजालपादनक्रकलविंकबिल्तमत्स्यक्रव्यादमेध्यानां भक्षणे पञ्चगव्यं पिबेत्त्रिरात्रमित्यौशनसं स्वविषये व्यवस्थापितम् । अभ्यासादौ स्मृत्यन्तरोक्तद्वादशरात्राद्यूह्यम् ॥

ननु शूद्रान्नभोजनवत्क्षत्रियाद्यन्नभोजनेऽपि प्रायश्चित्तं कुतो नोच्यते राजान्नं तेज आदत्त इत्यादिनिषेधस्य तत्रापि तुल्यत्वादित्यत आह ।

**क्षत्रियश्चापि वैश्यश्च क्रियावन्तौ शुचिव्रतौ ॥**

**तद्गृहे तु द्विजैर्भोज्यं हव्यकव्येषु नित्यशः ॥ १२ ॥**

शुचि अभग्न व्रत वेदाध्ययनाङ्गं ब्रह्मचर्यं ययोस्तौ क्रियाग्निहोत्रादिका इत्यादिस्तद्वन्तौ ब्रह्मचर्यपूर्वकाधीतवेदानुष्ठाननित्यनैमित्तिकश्रौतस्मार्त्तक्रियौ यौ क्षत्रियवैश्यौ तद्गृहे हव्यकव्येषु दैविकपैतृककर्मसु नित्यशो नित्य क्रियमाणेषु द्विजैर्विप्रैर्भोज्यम्भोक्तव्यमिति । विशेषणद्वयोपादानबलादेव निषेधस्यातद्विधक्षत्रियादिविषयत्व प्रपञ्चयति । अत एव चतुर्विंशतिमते । तत्र प्रायश्चित्तमप्यभिहितम् ।

सहस्रं तु जपेद्देव्याः क्षत्रियस्यान्नभोजने ।
तथोपवास वैश्यस्य सहस्रसार्द्धमेव च इति ॥ १२ ॥

कस्य चिच्छूद्रान्नस्य प्रतिप्रसवमाह ।

**घृतं क्षीरं तथा तैलं गुडं स्नेहेन पाचितम् ॥**

**गत्वा नदीतटे विप्रो भुञ्जीयाच्छूद्रभोजनम् ॥ १३ ॥**

अगव्यमपि घृतादि शूद्रसबन्धि भोज्य द्रव्यं विप्रो भुञ्जीयात्परन्तु नदीतीरादौ गत्वा नतु क्षत्रियादिगृहेष्विव तद्गृह एव स्थित्वेति स्नेहेन घृतादिना पाचितमित्यत्र स्नेहस्यैव साधकतमत्वावगमाज्जलादि परिहारेण स्नेहपक्वं स्नेहशब्दोपादानेन सस्नेहं वदुग्धादिपक्वं चाभ्यनुज्ञायते । तथाशब्देन कन्दूपक्वादेरपिग्रहणम् । अत एव देवलः ।

कन्दूपक्वं स्नेहपक्वं पायसं दधिसक्तवः ।
एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत् ॥

कन्दूर्भ्राष्टशाला । सुमन्तुरपि ।

गोरसं श्चैव सक्तुं च तैलं पिण्याकमेव च ।
अपूपान्भक्षयेच्छूद्राद्यच्चान्यत्पयसा कृतम् ॥

इति । आपस्तम्बोऽपि ।

आममन्नं मधु घृतं धानाः क्षीरं तथैव च ।
गुडमांसरसा ग्राह्या निवृत्तेनापि शूद्रतः ॥

चतुर्विंशतिमतेऽपि ।

आरनाल तथा क्षीरं कादुकन्दधिसक्तवः ।
स्नेहपक्वं च तक्रं च शूद्रस्यापि न दुष्यति ॥
आरनाल काञ्जिकाम् । तत्र विशेषमाहांगिराः ।
अशृतं वारनालं च कटुकाः सक्तवस्तिलाः ॥
फलानि पिण्याकमथो ग्राह्यमौषधमेव च ।

इति । अशृतमशृतधान्यप्रकृतिकम् ॥ १३ ॥

घृतादिभोजनाय वर्ज्यावर्ज्यौ शूद्रौ विविनक्ति ।

**मद्यमांसरतं नित्यं नीचकर्मप्रवर्तकम् ॥**
**तं शूद्रं वर्जयेद्विप्रः श्वपाकमिव दूरतः ॥ १४ ॥**
**द्विजशुश्रूषणरतान्मद्यमांसविवर्जितान् ॥**
**स्वकर्मनिरतान्नित्यं तान् शूद्रान्न त्यजेद् द्विजः ॥१५॥**

यः शूद्रो नित्यं क्रयविक्रयाशनादिभिर्मद्यमांसयोस्तथा नीचानां प्रतिलोमजानां यानि कर्माणि च अविकृन्तनादीनि तत्प्रवर्तकस्तं श्वपाकमिव दूरत एव विप्रो वर्जयेत् । ये पुनर्द्विजसुश्रूषारत मद्यमांससम्बन्धेन विशेषतो वर्जिताःस्वकर्मणि पाकयज्ञादौ नित्यम विरतमितरां तत्परास्तान् शूद्रानुक्तघृतादिभोजने द्विजो न परिहरेत् । अत्र वचनद्वयेऽप्येकवचनबहुवचनाभ्या मद्यादिरतस्यैकस्यापि न प्रतिगृह्णीयात्स्वकर्मरतानां बहूनामपि प्रतिग्रहे न दोष इत्युक्तं भवति ॥

प्रतिवर्णं सूतकान्नभोजने प्रायश्चित्तमाह ।

**अज्ञानाद्भुञ्जते विप्राः सूतके मृतकेऽपि वा ॥**
**प्रायश्चित्तं कथं तत्र वर्णे वर्णे विनिर्दिशेत् ॥ १६ ॥**

गायत्र्यष्टसहस्रेण शुद्धिः स्याच्छूद्रसूतके ॥
वैश्ये पञ्चसहस्रेण त्रिसहस्रेण क्षत्रिये ॥ १७ ॥
ब्राह्मणस्य यदा भुङ्क्ते द्वे सहस्रे तु दापयेत् ॥
अथवा वामदेव्येन साम्नैवैकेन शुध्यति ॥ १८ ॥

यदि विप्रा जननमरणाशौचयोरज्ञानाद्भुञ्जते तदा तेषां विप्राणां तत्तद्वर्णनिमित्तं प्रायश्चित्तं कथं स्यादित्याशङ्क्याह शूद्रसूतके गायत्र्यष्टसहस्रेण शुद्धिः स्यात् । अष्टानां सहस्राणां समाहारोऽष्टसहस्रं गायत्र्या अष्टसहस्रं गायत्र्यष्टसहस्रं तेन एवमुत्तरत्रापि । सूतकिनः शूद्रस्यान्नं विप्रो भुक्त्वाऽष्टसहस्राणि गायत्रीर्जपेत् वैश्यस्य पञ्चसहस्राणि क्षत्रियस्य त्रीणि सहस्राणि ब्राह्मणस्य द्वे सहस्रे इति अथवा सूतकिब्राह्मणान्नभोजने वामदेव्येनैकेन साम्नैव शुध्यति कया नश्चित्र आभुवदूतीत्यस्यामृच्युत्पन्नं साम वामदेव्यं तस्य सकृज्जपेनैव शुद्धिरिति । कामकृते त्वाह गर्गः ।

> शावे च सूतके चैवामत्या भुक्त्वैन्दवं चरन् ।
> मत्याभ्यासे तथा कुर्यात्कृच्छ्रं चान्द्रायणोत्तरम् ॥
> त्र्यहं वा कामतः कुर्यादभ्यासे कृच्छ्रमेव च ।
> द्विगुणं त्रिगुणं चैव चतुर्गुणमथापि वा ॥
> क्षत्रविट्शूद्रजातीनामाशौचे परिकीर्तितम् ।
> सवर्णानां तु सर्वेषां विप्रवन्निष्कृतिः स्मृता ।
> क्रमाद् वृद्धं क्रमाद्धीनं हीनजात्युत्तमेष्वपि ॥

इति । तत्राकामतो ब्राह्मणसूतकान्नभोजने विहितस्त्र्यहो द्विसहस्रगायत्रीजपसमान एव कृच्छ्रचतुर्थांशरूपत्वात् । इदं च प्रायश्चित्तमाशौचान्ते कर्तव्यम् । तथा च विष्णुः । ब्राह्मणादीनामाशौचे यः सकृदेवान्नमश्नीयात्तस्य तावदेवाशौचं यावत्तेषाम्, आशौचापगमे प्रायश्चित्तं कुर्यादिति । तथाऽशौचादिश्राद्धभोजनेऽपि प्रायश्चित्तमुक्तं चतुर्विंशतिमते ।

> प्राजापत्यं नवश्राद्धे पादोनं चाद्यमासिके ।
> त्रैपक्षिके तदर्द्धं स्यात्पादो द्वैमासिके ततः ॥

पादोनं कृच्छ्रमुद्दिष्टं षण्मासे चाब्दिके तथा।
त्रिरात्रं चान्यमासेषु प्रत्यब्दं चेदहः स्मृतम्॥
चान्द्रायणं नवश्राद्धे पादोनं मासिके स्मृतम्।
त्रैपक्षिके सान्तपनं कृच्छ्रं मासद्वये स्मृतम्॥
क्षत्रियस्य नवश्राद्धे व्रतमेतदुदाहृतम्।
वैश्यस्यार्द्धाधिकं प्रोक्तं क्षत्रियस्य मनीषिभिः॥

शूद्रस्य तु।

नवश्राद्धे भवेदर्द्धं प्राजापत्यं तु सर्वदा।
सङ्कल्पितेषु भुक्त्वा तु त्रिरात्रं क्षपयेदिति॥
ब्रह्मचारिणां श्राद्धभोजने यमः।
मासिकादिषु योऽश्नीयादसमाप्तव्रतो द्विजः॥
त्रिरात्रमुपवासोऽस्य प्रायश्चित्तम्विधीयते।
मधुमांसं च योऽश्नीयाच्छ्राद्धे सूतक एव च॥
प्राजापत्यं चरेत्कृच्छ्रं व्रतशेषं समापयेत्।
इति। अनुक्तविशेषे, तूशनाः।
दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग् द्विजः॥
ततः सन्ध्यामुपासीत शुध्येच्च तदनन्तरम्।

इति। संस्काराङ्गश्राद्धभोजने तु व्यासः।

निवृत्ते चूडहोमे तु प्राङ्नामकरणात्तथा।
चरेत्सान्तपनं भुक्त्वा जातकर्मणि चैव हि॥
स्वतोऽन्येषु च भुक्त्वान्नं संस्कारेषु द्विजोत्तमः।
नियोगादुपवासेन शुध्यते निन्द्यभोजने॥

इति। धौम्योऽपि।

ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा।
जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणं चरेत्॥ इति॥ १८॥

पुनरपि कस्य चिच्छूद्रान्नस्य प्रतिप्रसवमाह॥

**शुष्कान्नं गोरसं स्नेहं शूद्रवेश्मन आहृतम्॥**
**पक्वं विप्रगृहे भुक्तं भोज्यं तन्मनुरब्रवीत्॥ १९॥**

शुष्कमाममन्नं तण्डुलादि गोरसो दध्यादि घृतं क्षीरमित्यत्रोक्तस्यापि पुनरुपन्यासो गव्यत्वप्राप्त्यर्थः। स्नेहो नवनीतादि घृततैलयोः प्रागुक्तेः। एतत्सर्वं शूद्रगृहादानीय यदि विप्रगृहे पक्कं भवति तदा भोज्यमिति मनुराह। तत्र विशेषः अभुक्तमिति। यदि शूद्रगृहादानीयमानाच्छुष्का-द्यादेर्मध्याच्छूद्रैः कमपि कौतुकादिना भुक्तं न भवेत्तदैव तद्विप्रगृहपक्कमपि भोज्य नान्यथेति। तदाह प्रजापतिः। आममन्नमगर्हितमिति। सुमन्तु रपि। गोरसं चैवपक्क चेदित्यादि विशेषः प्रागेव निरूपितः॥

आपदि शूद्रान्नभोजने प्रायश्चित्तान्तरमाह।

**आपत्काले तु विप्रेण भुक्तं शूद्रगृहे यदि॥**
**मनस्तापेन शुध्येत द्रुपदां वा शतं जपेत्॥ २०॥**

यद्यापत्काले विप्रः शूद्रगृहे अकामाद्भुञ्जीत तदा मनस्तापा-त्कि मयेदं निषिद्धमाचरितं धिङ्मामित्याद्यनुशयाच्छुध्येत। कामतो भोजने द्रुपदा गायत्रीं याजुषीं द्रुपदादिवमुमुचान इत्येतां शतवारं जपेदिति मनस्तापद्रुपदयोः शोधकत्वमाह योगीश्वरः।

पश्चात्तापो निराहारः सर्वेऽमी शुद्धिहेतवः॥ इति॥
द्रुपदानामगायत्री यजुर्वेदे प्रतिष्ठिता॥ इति॥

वैदिकावैदिकविषयत्वेनास्य शूद्रान्न सूतकान्नं चेत्यस्य च व्यवस्था करणीया॥ २०॥

शूद्रेष्वन्यानपि भोज्यान्नानाह॥

**दासनापितगोपालकुलमित्रार्द्धसीरिणः॥**
**एते शूद्रेषु भोज्यान्ना यश्चात्मानं निवेदयेत्॥२१॥**

दासादयः षट् वक्ष्यमाणलक्षणाः शूद्रेषु भोज्यान्नाः॥

तत्र दासन पितयोर्लक्षणमाह॥

**शूद्रकन्यासमुत्पन्नो ब्राह्मणेन तु संस्कृतः॥**
**असंस्काराद्भवेद्दासः संस्कारादेव नापितः॥ २२॥**

यो ब्राह्मणेन शूद्रकन्यायां समुत्पन्नस्स यदि यथोक्तजातकर्मादिभिः संस्कारैस्संस्कृतस्तदा तस्मादेव संस्काराचापित इत्युच्यते संस्काराभावे पुनर्दास इति ।

गोपाललक्षणमाह ।

**क्षत्रियाच्छूद्रकन्यायां समुत्पन्नस्तु यः सुतः ॥**
**स गोपाल इति ख्यातो भोज्यो विप्रैर्न संशयः॥२३॥**

क्षत्रियाच्छूद्रकन्यायामुत्पन्नः पुनः स गोपाल इति लोके ख्यातो नाम्ना वृत्त्या च प्रसिद्ध एवेति न संशयः स विप्रैर्भोज्यान्नो भवति । यद्यप्येतदनंतरकुलमित्रलक्षणं वक्तुमुचितं तथापि तस्यावयवसामर्थ्यादेव पितृपितामहादिमित्रस्य प्रतीयमानत्वादवचनेऽपि न न्यूनतेति । आचार्यस्तु वैश्याच्छूद्रकन्यायामुत्पन्नः कुलमित्र तथैव च प्रक्रमादित्याह ॥

अर्द्धसीरिलक्षणमाह ॥

**वैश्यकन्यासमुद्भूतो ब्राह्मणेन तु संस्कृतः ॥**
**सोत्यर्द्धिक इति ज्ञेयो भोज्यो विप्रैर्न संशयः॥२४॥**

यो ब्राह्मणेन वैश्यकन्यायामुत्पन्नः स यथोक्तसंस्कारसंस्कृत एवार्द्धिक इतिज्ञेयः स विप्रैर्भोज्यान्न इत्यत्र संशय एव नास्ति । अर्द्धसीरिण एव संज्ञांतरप्रदर्शनाय शब्दान्तरेण निर्देशः । एतदनन्तरमात्मनिवेदकलक्षणं वक्तव्यं तदप्यवयवार्थस्य स्पष्टतया वाङ्मनःकर्मभिस्तवाहमिति वादिनमेवाचष्ट इति नोक्तम् । अत्राप्याचार्योऽर्द्धिकसाहचर्यात् क्षत्रियायां ब्राह्मणादुत्पन्नमात्मनिवेदकमाह । न चैषा शूद्रत्वोक्तिर्न युक्ता द्विजापत्यतया शूद्रादुत्कृष्टत्वात् । अस्तु वात्र कथचिद्वैश्यायां ब्राह्मणादुत्पन्नस्य आर्द्धिकस्य तु द्विजत्वादत्यंन्तायुक्तैव तदुक्तिरितिचेत् । उच्यते । विजातीयकन्याविवाहस्य कलौ निषेधेनाऽन्ोढात्वादिविशेषानुपादानादनूढास्वेव तासु व्यवहारो व्यभिचारोत्पन्नतया तदुक्तिः ।

शूद्राणां तु सधर्माणः सर्वेऽपध्वसजाः स्मृताः ।

इतिस्मरणात् । कुण्डासुतासूत्पन्नाना योगिना निषादादिसंज्ञां-तराभिधानाच्च । नचैवं कुण्डगोलकयोरब्राह्मण्यापत्तिरिष्टापत्तेः तत्कन्यास्वप्यनुढासु द्विजात्युत्पन्नानामपि शूद्रसधर्मत्वमेव । नच कलावस वर्णकन्यानामृतुव्यापनेऽपि गमननिषेधाच्चापितात्वनुत्पत्तेरेव भोज्यान्नता विवेको न संभवतीति वाच्यम् । पूर्वपूर्वयुगोत्पन्नानामप्यत्रानुवृत्त्याऽतिक्रान्त-निषेधेभ्योऽप्युत्पत्त्या वा विचारसंभवादिति ॥

यदन्नभोजने प्रायश्चित्तमुक्तं तेषां जलादिपानेऽपि तदाह ॥

**भाण्डस्थितमभोज्यानां जलं दधि घृतं पयः ॥**
**अकामतस्तु यो भुङ्क्ते प्रायश्चित्तं कथं भवेत् ॥२५॥**
**ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा उपसर्पति ।**
**ब्रह्मकूर्चोपवासेन योज्या वर्णस्य निष्कृतिः ॥२६॥**

ये पूर्वमभोज्यान्नाः कदर्यादयो गणितास्तेषां भाण्डस्थजलदधि-घृतपयसामन्यतममकामतो यो भुङ्क्ते तस्य प्रायश्चित्तं कथं स्यादित्या-कांक्षायां ब्राह्मणादीनामन्यतम एवंविधो यः पर्षदमुपसर्पति तस्य च पर्षदा ब्रह्मकूर्चोपवासेन ब्रह्मकूर्चार्थमुपवासो ब्रह्मकूर्चोपवासस्तेन पूर्वेद्युरुपोष्य परेद्युराहारान्तरं परित्यज्य ब्रह्मकूर्चपानेन निष्कृतिः शुद्धि-र्योज्या । तत्र कालविशेषमाह जाबालिः ।

चतुर्दश्यामुपोष्याथ पौर्णमास्यां विशेषतः ।
पञ्चगव्यं पिबेत्प्रातर्ब्रह्मकूर्चमितिस्मृतम् ॥

इति । देशमप्याह शातातपः ।

नदीतीरेषु गोष्ठेषु पुण्येष्वायतनेषु च ।

तत्र गत्वा शुचौ देशे ब्रह्मकूर्चं समाचरेद् इति ॥

शूद्रस्य विशेषमाह ॥

**शूद्राणां नोपवासः स्याच्छूद्रो दानेन शुध्यति ॥**
**ब्रह्मकूर्चमहोरात्रं श्वपाकमपि शोधयेत् ॥ २७ ॥**

शूद्राणामुपवासस्थानापन्नेन दानेन शुद्धिर्ब्रह्मकूर्चे तु समानमेव सर्वेषाम्। ननु

पञ्चगव्यं पिबेच्छूद्रो ब्राह्मणश्च सुरां पिबेत्।
उभौ तौ तुल्यदोषौ हि पूयाख्यनरके गतौ॥

इत्यत्रिणा शूद्रस्य पञ्चगव्यप्रतिषेधात्कथं तदनुवृत्तेरित्यत आह ब्रह्मकूर्चपानार्थमहोरात्रमुपवासः श्वपाकमपि शोधयेत्किं पुनः शूद्रमिति अत एव स्मृत्यन्तरीयं लिङ्गम्।

स्त्रीशूद्रस्य तु शुध्यर्थं प्राजापत्यं समाचरेत्।
पञ्चगव्यं च कुर्वन्ति स्नात्वा पीत्वा शुचिर्भवेत्॥

इति। नचात्रेर्वचनविरोधस्तद्वस्य एव, तस्य प्रायश्चित्तानङ्ग-पञ्चगव्यप्राशनविषयत्वात् सुरापाननिषेधवत्॥

ब्रह्मकूर्चद्रव्याण्याह॥

**गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम्॥**
**निर्दिष्टं पञ्चगव्यं तु पवित्रं पापशोधनम्॥ २८॥**

गोमूत्रादिपञ्चकं कुशोदकसहितं पञ्चगव्यं निर्दिष्टं तच्च पवित्रमतः पापानां शोधनं नाशनं भवति॥

गोमूत्राद्युपादानगवीनां वर्णविशेषानाह॥

**गोमूत्रं कृष्णवर्णायाः श्वेतायाश्चैव गोमयम्॥**
**पयश्च ताम्रवर्णाया रक्ताया गृह्यते दधि॥ २९॥**
**कपिलायाः घृतं ग्राह्यं सर्वं कापिलमेव वा॥**

उक्तवर्णगवीनामसंभवे गोमूत्रादिपञ्चकमपि कापिलमेव ग्राह्य-मितरस्पष्टार्थम्॥

गोमूत्रादीनां परिमाणमाह॥

**मूत्रमेकपलं दद्यादङ्गुष्ठार्द्धं तु गोमयम्॥ ३०॥**
**क्षीरं सप्तपलं दद्याद्दधि त्रिपलमुच्यते॥**
**घृतमेकपलं दद्यात्पलमेकं कुशोदकम्॥ ३१॥**

मूत्रं गोः पलं चतुःसौवर्णिकं पलं सुवर्णाश्चत्वार इति स्मरणात् पर्वद्वयात्मकस्याङ्गुष्ठस्यैकं पूर्वार्द्धमुच्यते तन्मात्रं गोमयम् । शेषं स्पष्टार्थम् । एतत्सर्वं यथोक्तपरिमाणं पलाशाद्यन्यतमपात्रे दद्यात्समानयेत् । तदाह प्रजापतिः ।

पलाशं पद्मपत्रं वा ताम्रं वाथ हिरण्मयम् ।
पात्रं गृहीत्वा तस्मिंस्तु पञ्चगव्यं समानयेत् ॥

इति । अशक्तं प्रति परिमाणान्तरमाह वृद्धपराशरः ।

गोमूत्रे माषकाश्चाष्टौ गोमयस्य तु षोडश ।
क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश कीर्तिताः ।
गोमूत्रवद्घृते ज्ञेयास्तदर्द्धञ्च कुशोदकम् ॥ इति ॥

गोमूत्रादिग्रहणे मन्त्रानाह ॥

**गायत्र्यादाय गोमूत्रं गन्धद्वारेति गोमयम् ॥**
**आप्यायस्वेति च क्षीरं दधिक्रावूण्यस्तथा दधि॥३२॥**
**तेजोऽसिशुक्रमित्याज्यं देवस्यत्वा कुशोदकम् ॥**
**पञ्चगव्यमृचापूतं स्थापयेदग्निसन्निधौ ॥ ३३ ॥**

गायत्र्यादिऋचा ग्रहणेन पूतं पवित्रं पञ्चगव्यमेकीकृत्याग्निसन्निधौ स्थापयेत् । यद्यपि तेजोसि देवस्यत्वेत्यनयोर्यजुष्ट्वादृचेति साधारण-व्यपदेशो नोपपद्यते तथापि छत्रिणो गच्छन्तीतिवद् भूम्ना तत्सिद्धिरिति न दोषः । अनन्तरकर्तव्यमाह ।

**आपोहिष्ठेति चालोड्य मानस्तोकेति मन्थयेत् ।**

आपोहिष्ठेत्येकैव ऋक् ऋचेत्युपक्रमात् । तृचः इत्याचार्या प्रायेण तथा विनियोगात् ॥

होमसाधनमाह ॥

**सप्तावरास्तु ये दर्भा अच्छिन्नाग्राः शुकत्विषः ॥**
**एतैरुद्धृत्य होतव्यं पञ्चगव्यं यथाविधि ॥ ३४ ॥**

सप्तप्रवरा येभ्यस्तेऽष्टादयोऽङ्किरायाः शुक्लविषो हरितवर्णा दर्भास्तैरुद्धृत्य यथाविधि वक्ष्यमाणमंत्रैस्तत्पञ्चगव्यं जुहुयात् । यत्तु

स्थापयित्वा तु दर्भेषु पलाशैः पत्रकैरथ ।
तत्समुद्धृत्य होतव्य देवताभ्यो यथाक्रमम् ॥

इतिप्राजापत्यवचनबलात्पलाशपत्रेण होम इति व्याख्यातम् तत्पलाशो हरितो हरिदिति कोशादर्शननिबन्धनमिति मंतव्यम् । तथात्वे बहुवचनासगतिः । तस्मात्पलाशैर्हरितैरित्यर्थोऽवगन्तव्य इति ॥

होममंत्रानाह ॥

**इरावती इदंविष्णुर्मानस्तोके च शंवती ॥**
**एताभिश्चैव होतव्यं हुतशेषं पिबेद् द्विजः ॥ ३५ ॥**

इरावती धेनुमती, इदं विष्णुर्विचक्रमे, मानस्तोकेतनये, शंवती शंशब्दोपलक्षिता शन्नोदेवीरभिष्ट इत्येषा शंवतीः पारयते तं च क्षिप्तिवचो यथा। अद्यावतं यमावतं ययेवेनमिशुवत इति वाक्तचोक्षेप एताभिभिश्चकाराद्ग्नये सोमायेति नाममंत्रेण सावित्र्या प्रणवेनाग्नये स्विष्टिकृते वेत्येतैरपि तंत्रैर्हुत्वा हुतशेषं द्विजः पिबेत् । द्विजग्रहणं वक्ष्यमाणमन्त्रविषयनियमाय । स्त्रीशूद्रयोस्तूष्णीमेव भवति तथा च प्रजापतिः ।

अग्नये चैव सोमाय सावित्र्या च तथैवच ॥
प्रणवेन तथा हुत्वा स्विष्टकृता तथैवच ॥

इति ।

पानेतिकर्तव्यतामाह ॥

**आलोड्य प्रणवेनैव निर्मथ्य प्रणवेन तु ॥**
**उद्धृत्य प्रणवेनैव पिबेच प्रणवेन तु ॥ ३६ ॥**

हस्तेनालोड्य यज्ञियकाष्ठेन निमथ्योंभयाभ्यां हस्ताभ्यामुद्धृत्याशब्दं पिबेत् प्रतिक्रियं प्रणवावृत्तिः।

ननु गोवधाद्युत्पन्नादृष्टरूपप्रत्यवायनिवृत्तिरस्तु प्रायश्चित्तेन अभो-

त्यभोजनादिषु त्वाहारपरिणामेनावयवोपचयरूपस्य दृष्टस्य कथं तेन निवृत्तिरित्यत आह ।

**यत्त्वगस्थिगतं पापं देहे तिष्ठति देहिनाम् ॥**
**ब्रह्मकूर्चं दहेत्सर्वं प्रदीप्तोऽग्निरिवेन्धनम् ॥ ३७ ॥**

भक्षितमभक्ष्य यथा त्वगस्थ्यादिरूपेण परिणम्य देहिनां देहे पापमशुचिभूत्वा तिष्ठति तथा ब्रह्मकूर्चमपि पीतं तेन तेन रूपेण परिणतं सत्तंतमवयवोपचयं दहतीति दृष्टद्वारैवास्य शोधकत्वं तत्र दृष्टान्तो यथाग्नेरिन्धनदहने नादृष्टमवान्तरव्यापारः किन्तु तत्क्षयोग एव तथा प्रकृतेपीति । अनेनाभक्ष्यभक्षणे ब्रह्मकूर्चपानमावश्यकमित्युक्तं भवति ।

नन्वेवं दशमूलीकषायपानवदस्यादृष्टरूपप्रत्यवायनिवर्तकत्वं स्यादित्यत आह ॥

**पवित्रं त्रिषु लोकेषु देवताभिरधिष्ठितम् ॥**

वरुणादिदेवताधिष्ठितत्वेन त्रिष्वपि लोकेषु प्रकारेषु दृष्टरूपदुष्टावयवनाशनादृष्टरूपप्रत्यवायनाशनापूर्वादृष्टजननरूपेषु पवित्रं सामर्थ्यमिति ।

ता देवता आह ॥

**वरुणश्चैव गोमूत्रे गोमये हव्यवाहनः ॥ ३८ ॥**
**दध्नि वायुः समुद्दिष्टः सोमः क्षीरे घृते रविः ॥**

गोमूत्रादीनां पञ्चानां वरुणादिपञ्च देवता अधिष्ठात्र्यो भवन्ति कुशोदकस्य तु कुशाधिष्ठातारो ब्रह्मविष्णुमहेशा एवाधिष्ठातारः अत एव ।

कुशमूले स्थितो ब्रह्मा कुशमध्ये जनार्दनः ।
कुशाग्रे शङ्करः प्रोक्त इत्यभिधाय ।
शरीरेष्वथ तिष्ठन्ति कुशोत्थजलबिंदवः ।
तस्य नश्यन्ति पापानि गरुडेनेव पन्नगाः ॥

इत्यभिहितं विष्णुधर्मोत्तरे।
स्वोच्छिष्टजलपाने प्रायश्चित्तमाह॥

**पिबतः पतितं तोयं भाजने मुखनिःसृतम्॥**
**अपेयं तद्विजानीयाद्भुक्त्वा चान्द्रयणं चरेत्॥३९॥**

मुखसंयोजिते भाजनेऽपिबतः पुरुषस्य मुखान्निःसृत तोय यदि पतितं तर्हि तदपेयं विजानीयाद्भुक्त्वा चान्द्रायणं चरेत्। पीतावशिष्टजलपाने तु त्रिरात्रम् तदाह शंखः।

पीतावशेषितं पीत्वा पानीयं ब्राह्मणः क्वचित्।
त्रिरात्र तु व्रतं कुर्याद्वामहस्तेन वा पुनः॥

इति। ब्राह्मणाद्युच्छिष्टजलपानेतूशनाः। ब्राह्मणोच्छिष्टानामपः पाने षोडश प्राणायामान् धारयेत्क्षत्रिये त्रिशद्वैश्ये चत्वारिंशच्छूद्राणां कुशवारिपाने त्र्यह बुद्धिपूर्वंचेद् त्र्यहं चतुरहं पञ्चरात्रं सप्तरात्रं पञ्चगव्यं पानं क्रमेणेति।

शवाद्युपहतकूपादिजलपाने प्रतिवर्णं प्रायश्चित्तमाह।॥

**कूपे च पतितं दृष्ट्वा श्वशृगालं च मर्कटम्॥**
**अस्थिचर्मादि पतितं पीत्वाऽमेध्या अपोद्विजः॥४०॥**
**नारं कुकूणकं काकं विड्वराहं खरोष्ट्रकम्॥**
**गवयं सौप्रतीकं च मायूरं खाड्गकं तथा॥४१॥**
**वैय्याघ्रमार्क्षंसैंहं वा कपेर्यदि निमज्जति॥**
**कुणपंक्तस्यपि दुष्टस्य पीतं स्यादुदकं यदि॥ ४२॥**
**प्रायश्चित्तं भवेत्पुंसः क्रमेणैतेन सर्वशः॥ ४३॥**

यस्मिन् कूपे श्वशृगाल श्वा कुक्कुरः शृगालः क्रोष्टा तयोः समाहारःश्वशृगालं मर्कटं वानर पतितं दृष्ट्वा अस्थिचर्मआदिशब्दान्मूत्रपुरीषादि वा पतितं दृष्ट्वा अमेध्या अपो यो द्विजः पिबति तस्य वक्ष्यमाणं प्रायश्चितं भवेदिति संबंधः। तथा नारं मानुषं काकं वायसीय विड्वराहखरोष्टशद्वेषु

तद्धितलोप आर्षेःगवयः शवरःसुप्रतीकश्चित्रमृगः मयूरः केकी खड्गो गराडको व्याघ्रो द्वीपी ऋक्षो भल्लूकः सिंहः पंचास्यः कपिरपि मर्कटावान्तरजातिः एतत्सम्बन्धि कुणप यस्मिन् तडागे निमज्जति तस्य दुष्टस्य तडागस्य-दकं यदि पीतं स्यात्तदा तस्य सर्वशः सर्ववर्णस्य पुंसो वक्ष्यमाणं प्राय-श्चित्तं क्रमेण भवति ॥

तदेव प्रायश्चित्तमाह ।

**विप्रः शुध्येत्त्रिरात्रेण क्षत्रियस्तु दिनद्वयात् ।**
**एकाहेन तु वैश्यस्तु शूद्रो नक्तेन शुध्यति ॥ ४४ ॥**

पूर्वोक्तशवाद्युपहतकूपादेर्जलपाने विप्रादयः क्रमात्त्रिद्व्येकरात्र-नक्तैः शुध्यन्ति तु शब्दादन्ते पञ्चगव्यप्राशनमपि भवति तदाह विष्णुः ।

मृतपञ्चनखात्कूपादत्यन्तोपहतमुदकं पीत्वा ब्राह्मणस्त्र्यहमुपव सेद्व्यहं राजन्य एकाहं वैश्यः शूद्रो नक्तं सर्वे चान्ते पञ्चगव्यं पिबेयुरिति यदि तत्रैव शवं शीर्यति तदा विशेषमाह देवलः ।

> क्लिन्न भिन्नं शव चैव कूपस्थ यदि दृश्यते ।
> पयः पिबेत्त्रिरात्रेण मानुषे द्विगुणं स्मृतम् ॥

इति । इद च सकृत्पाने अभ्यासेत्वाह हारीतः ।

> क्लिन्ने भिन्ने शवे तोये तत्रस्थ यदि तत्पिबेत् ।
> शुद्धौ चान्द्रायणं कुर्यात्तप्तकृच्छ्रमथापि वा
> यदि कश्चित्ततः स्नायात्प्रमादेन द्विजोत्तमः ।
> जपंस्त्रिषवणस्नायी अहोरात्रेण शुध्यति ॥

इति । कामाकामाभ्यां चान्द्रतप्तकृच्छ्रयोर्व्यवस्था । चण्डालकूपादि-जलपाने त्वापस्तम्बः ।

> चाण्डालकूपभाण्डस्थं नरः कामाज्जलं पिबेत् ।
> प्रायश्चित्त कथं तत्र वर्णे वर्णे विनिर्दिशेत् ।
> चरेत्सांतपनं विप्रः प्राजापत्य तु भूमिपः ।
> तदर्द्धन्तु चरेद्वैश्यः शूद्रे पादं विनिर्दिशेत् ॥

इति । अकामतस्तु देवलः ।

यस्तु चण्डालभाण्डस्थमज्ञानादुदकं पिबेत् ।
स तु त्र्यहेण शुध्येत शूद्रस्त्वेकेन शुध्यति ॥

इति । म्लेच्छादिपुष्करिण्यादिजलपानेऽप्यापस्तम्बः ॥

म्लेच्छादीनां जलं पीत्वा पुष्करिण्यां ह्रदेऽपि वा
जानुदघ्नं शुचि ज्ञेयमधस्तादशुचि स्मृतम् ।
तत्तोयं यः पिबेद्विप्रः कामतोऽकामतोऽपि वा ।
अकामान्नक्तभोजी स्यादहोरात्रं तु कामतः ॥

इति ।

इदानीमभोज्यान्नविशेषेण तदन्नभोजन प्रायश्चित्तविशेषमाह ॥

**परपाकनिवृत्तस्य परपाकरतस्य च ॥**
**अपचस्य च भुक्त्वान्नं द्विजश्चान्द्रायणं चरेत् ॥ ४५ ॥**

परपाकनिवृत्तादयस्त्रयोऽपि वक्ष्यमाणलक्षणास्तचकाराद्वृथापाकोऽप्येषामन्नं भुक्त्वा द्विजश्चान्द्रायणं कुर्यात् । इदं चात्यन्ताभ्यासविषयमवगन्तव्यम् । सकृद्भोजने तु भरद्वाज आह ।

निराचारस्य विप्रस्य निषिद्धाचरणस्य च ।
अन्नं भुक्त्वा द्विजः कुर्याद्दिनमेकमभोजनम् ॥

इति । निराचारो विहितपञ्चमहायज्ञानुष्ठानरहितः पाकनिवृत्तो निषिद्धाचरणः सर्वदा परान्नभोजनशीलः इदमपचस्याप्युपलक्षणं वृथापाकान्नभक्षणे त्वाह शातातपः ।

वृथापाकस्य भुंजानः प्रायश्चित्तं चरेद्द्विजः ।
प्राणायामांस्त्रिरभ्यस्य घृतं प्राश्य विशुध्यति ॥

इति ।

न केवलमपचान्नभोजने प्रत्यवायोऽपि तु तस्यान्नदानेऽपीत्याह ॥

**अपचस्य च यद्दानं दातुरस्य कुतः फलम् ॥**

**दाता प्रतिगृहीता च द्वौ तौ निरयगामिनौ ॥४६॥**

अपचस्यापचाय यद्दानं चतुर्थ्यर्थे षष्ठी बहुलानुशासनात् अस्य दातुः फलं कुतः यतस्तावुभावपि दातृप्रतिगृहीतारौ निरयगामिनौ इति।

परपाकनिवृत्तस्य लक्षणमाह ॥

**गृहीत्वाग्निं समारोप्य पञ्चयज्ञान्न निर्वपेत् ॥**
**परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्त्तितः ॥ ४७ ॥**

दारकाले दायाद्यकाले गृहपतौ वा प्रेते योऽग्निमाधायात्मनि तमग्निंसमारोप्य तस्मिन्नग्नौ पञ्चमहायज्ञान्न निर्वपेदसौ परपाकनिवृत्तः पर उत्कृष्टो वैश्वदेवाद्यर्थं गृह्याग्नौ क्रियमाणः पाकः परपाकस्तस्मान्नि वृत्तः परपाकनिवृत्त इति मुनिभिरुच्यते। अग्नेः सर्वदात्मसमारोपणेन पञ्च-महायज्ञादिसाधनत्वाभावात्।

परपाकरतस्य लक्षणमाह ॥

**पञ्चयज्ञान्स्वयं कृत्वा परान्नेनोपजीवति ॥**
**सततं प्रातरुत्थाय परपाकरतस्तु सः ॥ ४८ ॥**

यस्सततं प्रत्यहं प्रातरुत्थाय पञ्चमहायज्ञान्स्वयं कृत्वा परान्नेनैवोपजीवति स परपाकरत इत्युच्यते।

परपाकरुचिर्नस्यादनिन्द्यामन्त्रणादृते ॥

इतिनिषेधातिक्रमात्।

अपचस्य लक्षणमाह ॥

**गृहस्थधर्मा यो विप्रो ददाति न विवर्जितः ॥**
**ऋषिभिर्धर्मतत्वज्ञैरपचः परिकीर्त्तितः ॥ ४९ ॥**

यो गार्हस्थ्यमास्थितोऽप्यन्नदानादिवर्जितः केवलमुदरम्भरिरेव सोऽपच इति मुनिभिः परिकीर्त्तितः। तथा श्रूयते "केवलाघोभवतिकेवलादी" ति ननु इकृश्तिपौधातुनिर्देश इति वार्त्तिकाद्ददातिशब्दो धातुनिर्देशमेव

चरति न तु धात्वर्थनिर्देशमितिचेत् सत्यं। यजतिषु येयजामहं करोतीत्यादिष्वर्थनिर्देशोयमितिप्रत्ययदर्शनात् । वृथापाकलक्षणमाह वृहस्पतिः ।

यो हि हित्वा विवाहाग्निं गृहस्थ इति मन्यते ।

अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥ इति ।

नन्वेवं कलौ कस्यापि भोज्यान्नता न स्यादेवंप्रायत्वात् सर्वेषामित्यत आह ॥

**युगे युगे तु ये धर्मास्तेषु तेषु च ये द्विजाः ॥**

**तेषां निन्दा न कर्तव्या युगरूपा हि ते द्विजाः॥९०॥**

अयमभिसन्धिः । युगस्वभावप्रयुक्ताया अधर्मप्रवृत्तेरपरिहार्यत्वद्विमादालस्यादिपुरुषप्रयुक्तायास्त्ववश्यपरिहार्यत्वेन प्रायश्चित्ताभिधानस्यार्थवत्त्वान्नातिप्रसङ्गः इति । पदार्थस्तूपवर्णित एव प्राक् ।

एवं केषु चिदुपपातकेषु प्रायश्चित्तमभिधाय जातिभ्रंशकरेषु ब्राह्मणतिरस्कारप्रायश्चित्तमाह ॥

**हुङ्कारं ब्राह्मणस्योक्त्वा त्वङ्कारं च गरीयसः ॥**

**स्नात्वा तिष्ठन्नहः शेषमभिवाद्य प्रसादयेत् ॥९१॥**

यो ब्राह्मणस्य भर्त्सनाय हुङ्कारं प्रयुंक्ते यो अभिवाद्ययोर्विद्यादिगरिष्ठस्य त्वमित्येकवचन प्रयुङ्क्ते स तत्कालमेव स्नात्वा यावदस्तमयं निराहारि स्थित्वासन्ध्यायां तमभिवाद्य प्रसादयेत् । तथा च मनुः

हुङ्कारं ब्राह्मणस्योक्त्व त्वङ्कारं तु गरीयसः ।

स्नात्वा नाश्नन्नहःशेषमभिवाद्य प्रसादयेत् ॥

इति । यद्यपि ब्राह्मणस्य रुजः कृत्यमिति मनुना ब्राह्मणताडनमेव जातिभ्रंशकरेषु अभिवाद्यप्रसादयेदितिपरिगणितं न हुङ्काराद्यपि तथा मानसरुगुत्पादकत्वात्तस्यापि जातिभ्रंशकरत्वमविरुद्धमिति ।

ब्राह्मणताडनादौ प्रायश्चित्तमाह ॥

**ताडयित्वा तृणेनापि कण्ठे बध्वापि वाससा ।**

विवादे वापि निर्जित्य प्रणिपत्य प्रसादयेत् ॥५२॥

तृणताडनादीनां शरीरानुपघातकत्वेपि मानसोपघातकत्वेपि प्रायश्चित्तनिमित्तत्वमित्यपिशब्दार्थः । गर्वातिशयेनैतत्करणे तूपवासोऽपि । तदाह बृहस्पतिः ।

गुरुं त्वंकृत्य गर्वेण विप्रं निर्जित्य वादतः ।
ताडयित्वा तृणेनापि प्रसाद्योपवसेद्दिनम् ॥
इति । अभ्यासे तु बौधायनः ।
वादेन ब्राह्मणं जित्वा प्रायश्चित्तविधित्सया ।
त्रिरात्रोपोषितः स्नात्वा प्रणिपत्य प्रसादयेत् ॥
इति । पादस्पर्शावाच्यवचनयोः प्रायश्चित्तमाह स एव ।
पादेन ब्राह्मणं स्पृष्ट्वा प्रायश्चित्तविधित्सया ।
दिवसोपोषितः स्नात्वा प्रणिपत्य प्रसादयेत् ।
अवाच्यं ब्राह्मणस्योक्त्वा प्रायश्चित्तं विधीयते ।
कृच्छ्रातिकृच्छ्रं जित्वा तु प्रणिपत्य प्रसादयेत् ।
आक्रोशमनिश कृत्वा कृच्छ्रं कुर्वीत मानवः ॥
इति ।

विप्रावगूर्णादौ प्राश्चित्तमाह ॥

अवगूर्य त्वहोरात्रं त्रिरात्रं क्षितिपातने ।
अतिकृच्छ्रं च रुधिरे कृच्छ्रोऽभ्यंतरशोणिते ॥ ५३ ॥

क्रोधावेशेन ब्राह्मणताडनाय दण्डाद्युपघाताभ्यामहोरात्रमुपवसेत् । ब्राह्मणं भूमौ निपात्य त्रिरात्रमुपवसेत् । प्रहारेण रुधिरोत्पत्तावतिकृच्छ्रमभ्यन्तरशोणिते प्रवाहमन्तरेण घनीभूतरुधिरे प्रहारे कृच्छ्रं चरेत् । त्वग्भेदादौ प्रायश्चित्तमाह बृहस्पतिः ।

काष्ठादिना ताडयित्वा त्वग्भेदे कृच्छ्रमाचरेत् ।
अस्थिभेदेऽतिकृच्छ्रस्तु पराकस्त्वगकर्तने ॥
इति । तदेतत्समानजातीयस्यविजातीयस्य तु विशेषमाह प्रजापतिः ।

द्विगुणं त्रिगुणं चैव चतुर्गुणमथापि वा ।
क्षत्रविट्शूद्रजातीना ब्राह्मणस्य वधे व्रतम् ॥

इति देवाद्याक्रोशने तु सुमन्तुः । देवर्षिगोब्राह्मणाचार्यमातापितृनरेन्द्राणां प्रतिषेधने आक्रोशने जिह्वां दहेद्धिरण्यं दद्यादिति । प्रतिषेधनं निन्दनमाक्रोशो गालिदानम् ।

इदानीं चाभिमतमतिकृच्छ्रलक्षणमाह ॥

**नवाहमतिकृच्छ्रः स्यात्पाणिपूरान्नभोजनः ।**
**त्रिरात्रमुपवासः स्यादतिकृच्छ्रः स उच्यते ॥५४॥**

यो नवाहोरात्रं पाणिः पूर्यते यावत्तावदन्नेन तद्भोजनमस्मिन्निति पाणिपूरान्नभोजनः स्यात्प्रसृतिपरिमितान्नभोजन इति यावत् ।

यस्मिंश्च त्रिरात्रमुपवासः स्यात्स दशाहसाध्योऽतिकृच्छ्र इत्युच्यते । अतिकृच्छ्रशब्दस्यानुगतार्थतां स्पष्टयितुं पुनस्तेनैव विशेषेण ॥

नन्वन्यान्यपि जातिभ्रंशकराण्यघ्रेयघ्राणादीनि सन्ति तत्र किं प्रायश्चित्तमित्यत आह ॥

**सर्वेषामेव पापानां संकरे समुपस्थिते ।**
**दशसाहस्रमभ्यस्ता गायत्री शोधनं परम् ॥ ५५ ॥**

सर्वत्वमाधिवारिकमिति न्यायेन पूर्वाधिकृतानां जातिभ्रंशकराणामघ्रेयघ्राणादीनां पापानां संकरे संपर्के समुपस्थिते दशसहस्रवारमभ्यस्ता गायत्र्येव परं शोधनं नान्यदिति । यत्वनुक्तनिष्कृतिषु सर्वेष्वपि निमित्तेष्विदं सामान्यप्रायश्चित्तं तज्जातिभ्रंशकरेष्वेवेति । तदयुक्तम् । शास्त्रान्तरे सामान्यप्रायश्चित्तान्तराभिधानेन पौनरुक्त्यात् । तस्माद्यथोक्तैव व्याख्या साधीयसीति ।

**तपस्तप्त्वा तीव्रं यमलभत सार्द्धं सुरगणैः**
**सुतं साकन्देव्या विहितनियमः कश्यपमुनिः ॥**

स्वयं स्रष्टुः स्रष्टा गतिरपि महेन्द्रस्त्रिजगता
मुपेन्द्रत्वं सोऽपि त्रिदशपतिभक्त्या प्रथयति ॥ १ ॥

धर्माधिकारिकुलकैरवकाननेन्दुश्रीरामपण्डितसुतेन विनायकेन ॥
एकादशोऽपि विवृतोऽत्र पराशरस्याध्यायः कृतोऽवननीयविभुक्ति-
भुक्त्यै ॥ २ ॥

इति श्रीधर्माधिकारिरामपण्डितात्मजनन्दपण्डितापरनामधेयवि-
नायकपण्डितकृतौ पराशरस्मृतिविवृतौ विद्वन्मनोहरायामेकादशोऽध्यायः॥
शुभमस्तु ॥

श्रीगणेशाय नमः ।

समाने शब्दार्थे तदनुगतवर्णेऽपि च समे
स्वरूपे सामर्थ्ये सकलपुरुषार्थौघहरणे ।
हरेर्यत्प्राथम्यं हरिहर "यदेवं" द्विजनता-
मुखाब्जेष्वासीत्तत्सकलमपि लक्ष्मीविलसितम् ॥१॥

धर्माधिकारिकुलकैरवकाननेन्दु-
श्रीरामपण्डितसुतेन विनायकेन ।
तद्द्वादशे विवरणं क्रियतेऽधुनाऽध्याये
महाघचयशुद्धिनिवारणाय ॥ २ ॥

एवमध्यायचतुष्टयेनोपपातकप्रायश्चित्तमभिधाय महापातकप्रायश्चित्तविधानाय द्वादशाध्यायमारभते ।

तत्रसङ्करकाण्डे प्रकान्तप्रकीर्णकप्रायश्चित्तशेषं समापयितुं तावदाह ।

दुःस्वप्नं यदि पश्येत्तु वान्ते च क्षुरकर्मणि ।
मैथुने प्रेतधूमे च स्नानमेव विधीयते ॥ १ ॥

दुस्वप्नमरिष्टसूचकस्वप्नमात्मनः चौरतैलाभ्यङ्गादिदर्शनं स्वप्नाध्यायप्रतिपादितं यदि पश्येत्प्रातः स्मरेत्तदा वान्ते भुक्तोद्गिरणे क्षुरकर्मणि चौरे मैथुने ऋतुकालीने स्त्रीसम्भोगे प्रेतधूमस्पर्शे चकारादजीर्णोद्गारे दुर्जनस्पर्शनचितिपूयस्मशानस्पर्शेषु च स्नानमाचरेत् । तदाहुर्मनुवृद्धपराशरशातातपाः ।

अजीर्णेऽभ्युदिते वान्ते श्मश्रुकर्मणि मैथुने ।
दुस्वप्ने दुर्जनस्पर्शे स्नानमेव विधीयते ॥
दुस्वप्ने मैथुने वान्ते विरिक्ते क्षुरकर्मणि ।
चितिपूयश्मशानानां स्पर्शने स्नानमाचरेत् ॥

ऋतौ तु गर्भं शङ्कित्वा स्नानं मैथुनिनः स्मृतम् ।
अनृतौ तु यदा गच्छेच्छौचं मूत्रपुरीषवत् ॥ इति ॥ १ ॥

इदानीं पुनः संस्कारनिमित्तान्याह ।

**अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च ।**
**पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥ २ ॥**

अज्ञानतो विण्मूत्रप्राशने सुरासंसृष्टान्नप्राशने च त्रयो वर्णाः ब्राह्मणक्षत्रियवैश्याः तप्तकृच्छ्रचरणानन्तरं पुनः संस्कारं पुनरुपनयनमर्हन्ति विण्मूत्रमिति समाहाराद्रेतःकुणपयोरपि ग्रहणं तथा च गौतमो मत्या मद्यपाने तप्तकृच्छ्रस्ततोऽस्य संस्कारो मूत्रपुरीषकुणपरेतसां प्राशने चेति। सुरात्रपैष्टीवेतरस्याः क्षत्रियवैश्ययोरनिषेधात् । तत्संसर्गोऽप्यनुपलक्ष्य-गोरसोविवक्षितः । रसोपलब्धौ द्रव्यान्तरसंसर्गेऽपि सुरात्वानपायात् । आज्यत्वस्येव पृषदाज्ये । अत एवाज्यपा इति निगदाः कार्या न पृषदा-ज्यपा इत्युक्तम् । तथा च मुख्यमेव प्रायश्चित्तं तत्रापद्येत । अज्ञानादिति चात्राप्यनुषज्यते ।

अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव च ।
पुनः संस्कारमर्हन्ति त्रयोवर्णा द्विजातयः ॥

इति मनुस्मरणात् । एतेनाज्ञानतः सुरापाने पुनः संस्कारः कैमु-तिकन्यायेन सिद्धः । तथा च बौधायनः । अमत्या सुरापाने कृच्छ्राब्द-पादं चरित्वा पुनरुपनयनमिति कामतः सुरापानेन मरणान्तिकस्यैवोक्त-त्वात् । किं पुनः संस्कारेण । ब्राह्मणस्य तु कामाकामाभ्यां मद्यपा-नेऽपि पुनः संस्कारः अमत्या मद्यपान इति गौतमवाक्यात् । मत्या मद्यपाने त्वसुरायाश्चज्ञाने कृच्छ्रो घृतप्राशनं पुनः संस्कारश्चेति वसिष्ठस्म-रणात् । चकारादुक्तानां चण्डालान्नभोजनादीनामनुक्तानामङ्गादिदेशगम-नानाञ्चोपसंग्रहः । तथा च वसिष्ठः । एतदेव चण्डालपतितान्नभोजनेषु ततः पुनरुपनयनमिति । वक्तुरपि । विड्वराहग्रामकुक्कुटनगोमांसभक्षणे

तु सर्वेष्वेतेषु द्विजानां प्रायश्चित्तान्ते पुनः संस्कारं कुर्यादिति । शातातपोऽपि ।

लशुनं गृञ्जनं जग्ध्वा पलाण्डुं च तथा शुनः ।
उष्ट्रमानुषकेभाश्वरासभीक्षीरभोजनात् ॥
उपनायं पुनः कुर्यात्तप्तकृच्छ्रञ्चरेन्मुहुः ।

पैठीनसिः । गव्युष्ट्रीमानुषीक्षीरभोजने तप्तकृच्छ्रः पुनरुपनयनमिति । आदिपुराणे ।

अङ्गवङ्गकलिङ्गेषु सौराष्ट्रमगधेषु च ।
विना यात्रां तु यो गच्छेत्पुनः संस्कारमर्हति ।
सौराष्ट्रसिन्धुसौवीरानावन्त्यं दक्षिणापथम् ।
एतान् देशान् द्विजो गत्वा पुनः संस्कारमर्हति ॥
हिमवत्कौशिकीं विन्ध्यां पारं पद्मस्य पश्चिमम् ।
तीर्थयात्रां विना गच्छेत्पुनः संस्कारमर्हति ॥
कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् ।
गण्डकीबाहुतरणात्पुनः संस्कारमर्हति ॥

बौधायनः ।

सिन्धुसौवीरसौराष्ट्रान् तथा प्रत्यन्तवासिनः ।
अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति ।
रासभं महिषं मेषं वलीवर्द्दं क्रमेलकम् ।
आरुह्य ब्राह्मणो मोहात्पुनः संस्कारमर्हति ॥
मधुं विना चोपनीतः पुनः संस्कारमर्हति ।

हारीतोऽपि ।

शिखां छिन्दन्ति ये मोहाद्द्वेषादज्ञानतोऽपि वा ।
पुनः संस्कारमर्हन्ति ।
अज्ञाः छिन्दन्ति ये केचित् द्विजातीनां शिखां नराः ।
चरेयुस्ते दुरात्मानः प्राजापत्यं विशुद्धये ॥

इति । पुनःसंस्कारोऽत्र पुनरुपनयनं वक्ष्यमाणाजिनादिपर्युदा-

सस्यान्यत्रासम्भवात् । स च समाख्याबलादेव कर्मविशेषेण पूर्वसंस्कार-नाशे पुनःसंस्काराधायको न तु शोधकः । शुद्धेः प्रायश्चित्तसाध्यत्वात् । अत एव प्रायश्चितान्ते पुनःसंस्कारं कुर्यादित्यादिविधिवाक्येषु द्वयोरपि स्वस्वकार्यप्रतिपादनमुखेनैव समाख्याभ्यां क्रमेणानुष्ठानप्रतिपादनं युक्तम् यत्तु यमेन ।

असुरामद्यपाने च कृते गोभक्षणेऽपि वा ।
तप्तकृच्छ्रपरिक्लिष्टो मौञ्जीहोमेन शुध्यति ॥
इति । मौञ्जीहोमस्य शोधकत्वमुक्तम् ।

तन्मौञ्जीहोमादुत्तरकालानुष्ठेयकर्माधिकाराभिप्रायेण, न तु दोष-निवृत्त्यभिप्रायेण । तस्मात्पुनरुपनयनं पुनःसंस्काराधायकं न तु प्रकृत-दोषनिवर्तकमिति स्थितम् । यत्र तु जातकर्मादीत्यादिविशेषः स्मर्यते तत्र तदादीना सर्वेषामेवानुष्ठानम् । यथा

जीवन्यदि समागच्छेत् घृतकुम्भे निमज्य तम् ।
उद्धृत्य स्नापयित्वास्य जातकर्मादि कारयेत् ॥

चिरप्रोषितस्य जीवद्वार्त्तानाकर्णने कृतप्रेतक्रियस्य पुनरागमनेऽयं विधिः । तथा प्रव्रज्यादिप्रत्यावृत्तस्यापि प्रायश्चिताचरणानन्तरं जात-कर्मादीति । संस्कारमाह वृद्धपराशरः ।

जातकर्मादिभिः सर्वैः संस्कृतैः शुद्धिमाप्नुयात् ॥
इति । यद्यपि सर्वैरित्यविशेषोपादाने सन्यासिनोपि विवा-हादि प्रसज्येतेत्यर्थान्तरापातः । तथा च जातकर्मादीत्यादिशब्देनापि तत्पर्यन्तानामेवोपसंग्रहः ।

पुनरुपनयननाम्ना सर्वधर्मातिदेशप्राप्तावपवादमाह ।

**अजिनं मेखला दण्डो भैक्ष्यचर्या व्रतानि च ॥**
**निवर्तन्ते द्विजातीनां पुनः संस्कारकर्मणि ॥ ३ ॥**

अजिनं कृष्णाजिनादि मेखला मौञ्ज्यादि दण्डः पलाशादि भैक्ष्य-चर्या सायंप्रातर्विहिता व्रतानि सौम्यप्राजापत्यादीनि मधुमांसाञ्जनादि-

वर्जनानि वा, द्विजातीनां त्रैवर्णिकाना पुनः संस्कारकर्मणि निवर्तन्ते चकाराद्वपनादीन्यपि । तथा चाश्वलायनः । अथोपेतपूर्वस्य कृताकृतं केशवपनं मेधाजनन च निरुक्त परिदानं कालस्य च तत्सवितुर्वृणीमह इति सावित्रीमिति । तत्र विशेषमाह कश्यपः चीर्णप्रायश्चित्तः प्राच्या-मुदीच्यां वा दिशि गत्वायत्र पश्वादीनां शब्दो न श्रूयते तस्मिन्देशेऽग्निं प्रज्वाल्य ब्रह्मासनमास्तीर्य प्राजप्रणीतेन विधिना पुनः संस्कारमर्हन्तीति ।

इदानीं प्रसगात्पूर्वोक्तामेध्याक्तभक्षणे प्रायश्चित्ते गुणान्तरमाह ।

**विण्मूत्रस्य च शुद्ध्यर्थं प्राजापत्यं समाचरेत् ॥**
**पञ्चगव्यं च कुर्वीत स्नात्वा पीत्वा शुचिर्भवेत् ॥४॥**

विण्मूत्रमित्यमेध्यमात्रोपलक्षणं तद्भक्षणे पूर्वोक्त प्राजापत्यकृच्छ्रं चरेत्पञ्चगव्यं च पूर्वोक्तप्रकारेण कृत्वा तेन स्नात्वा तदेव पीत्वा शुचि-र्भवेत् ।

अथ विहितमरणे सङ्कल्पाद्विवृत्तौ प्रायश्चित्तमाक्षिपति ।

**जलाग्निपतने चैव प्रव्रज्यानाशकेषु च ॥**
**प्रत्यावसितवर्णानां कथं शुद्धिर्विधीयते ॥ ५ ॥**

जलं जलप्रवेशोऽग्निप्रवेशः पतन भृगुपातः तेषांसमाहारस्तस्मिन् प्रव्रज्या संन्यासः अनाशकमनशनं बहुवचनान्महाप्रस्थानं गृह्यते । तेषु प्रत्या गृहीतव्रताः कृतसङ्कल्पा ईति यावत् । ते च ते अवसिताश्च प्रत्यावृत्ता इति यावत्, तादृशानां वर्णानां कथं शुद्धिर्विधीयतइति प्राश्नार्थः । यद्यपि त्रिविधमपि जलादिमरणं सम्भवति विहितं प्रतिषिद्धमभ्यनुज्ञातं चेति, तथाप्यत्र विहितमेव विषयस्तत्रैव संकल्पादि व्रतसम्भवात् । प्रत्य-शब्देन च कृतसङ्कल्पस्यैवाभिधानात् । एतेन निषिद्धमरणायोद्यम्य निवृत्तस्य प्रायश्चित्तान्तरमूह्यमित्युक्तं भवति । तदेवाह यमः ।

जलाग्न्युद्बन्धनभ्रष्टाः प्रव्रज्यानाशकच्युताः ।
विषप्रपतनप्रायः शस्त्रघातच्युताश्च ये ।

न वै ते प्रत्यवसिताः सर्वधर्मबहिष्कृताः ।
चान्द्रायणेन शुध्यन्ति तप्तकृच्छ्रद्वयेन च ॥

इति । निषिद्धमरणविषयत्वञ्चास्योद्बन्धनविषयस्वादिसाहचर्येण स्पष्टीकृतम् ।

इदानीं प्रायश्चित्तमाह ॥

**प्राजापत्यद्वयेनैव तीर्थाभिगमनेन च ॥**
**वृषैकादशदानेन वर्णाः शुध्यन्ति ते त्रयः ॥ ६ ॥**

क्षत्रियस्य प्राजापत्यद्वयेन वैश्यस्य प्राजापत्यचतुष्टयप्रत्याम्नायरूपतीर्थयात्रया शूद्रस्य प्राजापत्यद्वयेन वैश्यस्य प्राजापत्यचतुष्टयप्रत्याम्नायरूपतीर्थयात्रया शूद्रस्य वृषभैकादशगोदानेन च क्रमाच्छुद्धिर्भवति ।

ब्राह्मणस्य विशेषमाह ।

**ब्राह्मणस्य प्रवक्ष्यामि वनं गत्वा चतुष्पथे ॥**
**सशिखं वपनं कृत्वा प्राजापत्यद्वयं चरेत् ॥ ७ ॥**
**गोद्वयं दक्षिणां दद्याच्छुद्धिं पाराशरोऽब्रवीत् ॥**
**मुच्यते तेन पापेन ब्राह्मणत्वं च गच्छति ॥ ८ ॥**

ब्राह्मणस्य शुद्धिं पाराशरोऽब्रवीत्तामहं प्रवक्ष्यामीति संबन्धः । जलाग्न्यादिमरणसङ्कल्पान्निवृत्तो ब्राह्मणो वनं गत्वा चतुष्पथे सशिखं वपनं कृत्वा प्राजापत्यद्वयं चरित्वा गोद्वयं प्रायश्चित्तसाद्गुण्याय दक्षिणां दत्वा तस्मात्पापान्मुच्यते । जलाग्न्यादिमरणसङ्कल्पान्निवृत्तस्य चण्डालत्वोत्पत्त्या यदपगतं ब्राह्मणत्वं तदपि पुनः प्राप्नोति । तदाह वृद्धपराशरः ।

अनाशकान्निवृत्तस्तु चातुर्वर्ण्यव्यवस्थितः ।
चण्डालः स तु विज्ञेयो वर्जनीयः प्रयत्नतः ।
लुप्तधर्मास्तु चण्डालाः परिव्राजकतापसाः ।
तेभ्यो जातान्यपत्यानि चण्डालैः सह वासयेत् ।

जलाग्निपतने चैव प्रव्रज्यानाशने तथा।
प्रत्यावसितवर्णानां प्रायश्चित्तं कथं भवेत्।
ब्राह्मणानां प्रसादेन तीर्थाभिगमनेन च।
गवां च शतदानेन वर्णाः शुध्यन्ति ते त्रयः।
ब्राह्मणस्य प्रवक्ष्यामि गत्वारण्यं चतुष्पथे।
सशिखं वपनं कृत्वा त्रिसन्ध्यमवगाहनम्
सावित्र्यष्टसहस्रं तु जपेच्चैव दिने दिने।
मुच्यते सर्वपापेभ्यो ब्राह्मणत्वं च गच्छति।
भिक्षार्थी विचरेद्ग्रामे गृहान् सप्त वने वसन्।
तां च भिक्षां समश्नीयादर्द्धार्द्धेन विशुध्यति॥

इति। ननु वृद्धपराशरोक्ता शुद्धिं प्रवक्ष्यामीति मूले क्षत्रियशूद्रयोः प्राजापत्यवृषभैकादशगोदाने प्रोक्ते साक्षिवचने तु ब्राह्मणेन तु ब्राह्मणप्रसादगोप्रदाने तथा मूले ब्राह्मणस्य गोद्वयसहितं प्राजापत्यद्वयमुक्तं साक्षिवचने तु षाण्मासिकं व्रतमिति चेत्। उच्यते। युगान्तरीयनरापेक्षयापि प्रकृतकलियुगीयनराणामत्यल्पप्राणतया प्रायश्चित्तसंकोचस्य न्याय्यत्वात्।

अत एव संन्यासात्प्रत्यावृत्तौ संवर्त्तोऽपि षाण्मासिकमेव व्रतमाह।

सन्यस्य दुर्मतिः कश्चित् प्रत्यापत्तिं व्रजेद्यदि।
स कुर्यात्कृच्छ्रमश्रान्तः षण्मासान्प्रत्यनन्तरम्॥
इति। तथा वृद्धपराशरोऽपि व्रतान्तरमाह।
यः प्रत्यवसितो विप्रः प्रव्रज्यातो विनिर्गतः।
अनाशकनिवृत्तश्च गार्हस्थ्यं चेच्चिकीर्षति।
स चरेत्त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि च।
जातकर्मादिभिः सर्वैः संस्कृतः शुद्धिमाप्नुयात्॥

इति। तदेषां कल्पानां शक्त्याद्यपेक्षया व्यवस्थायां न विरोधः। ततश्च संन्यासादिप्रत्यावृत्तस्य यथोक्तप्रायश्चित्तानन्तरं जातकर्मादिभिः संस्कारैः पुनः संस्कारं कृत्वा पुनः संन्यासादिपरिपालनमेव कर्तव्यं न

